॥ डाकिनीस्तोत्रम् ॥

आनन्दभैरवी उवाच
अथ वक्ष्ये महाकाल मूलपद्मविवेचनम् ।
यत् कृत्वा अमरो भूत्वा वसेत् कालचतुष्टयम् ॥ १॥

अथ षट्चक्रभेदार्थे भेदिनीशक्तिमाश्रयेत् ।
छेदिनीं सर्वग्रन्थीनां योगिनीं समुपाश्रयेत् ॥ २॥

तस्या मन्त्रान् प्रवक्ष्यामि येन सिद्धो भवेन्नरः ।
आदौ शृणु महामन्त्रं भेदिन्याः परं मनुम् ॥ ३॥

आदौ कालींसमुत्कृत्य ब्रह्ममन्त्रं ततः परम् ।
देव्याः प्रणवमुद्धृत्य भेदनी तदनन्तरम् ॥ ४॥

ततो हि मम गृह्णीयात् प्रापय द्वयमेव च ।
चित्तचञ्चीशब्दान्ते मां रक्ष युग्ममेव च ॥ ५॥

भेदिनी मम शब्दान्ते अकालमरणं हर ।
हर युग्मं स्वं महापापं नमो नमोऽग्निजायया ॥ ६॥

एतन्मन्त्रं जपेत्तत्र डाकिनीरक्षसि प्रभो ।
आदौ प्रणवमुद्धृत्य ब्रह्ममन्त्रं ततः परम् ॥ ७॥

शाम्भवीति ततश्चोक्त्वा ब्राह्मणीति पदं ततः ।
मनोनिवेशं कुरुते तारयेति द्विधापदम् ॥ ८॥

छेदिनीपदमुद्धृत्य मम मानसशब्दतः ।
महान्धकारमुद्धृत्य छेदयेति द्विधापदम् ॥ ९॥

स्वाहान्तं मनुमुद्धृत्य जपेन्मूलाम्बुजे सुधीः ।
एतन्मन्त्रप्रसादेन जीवन्मुक्तो भवेन्नरः ॥ १०॥

तथा स्त्रीयोगिनीमन्त्रं जपेत्तत्रैव शङ्कर ।
ॐ घोररूपिणिपदं सर्वव्यापिनि शङ्कर ॥ ११॥

महायोगिनि मे पापं शोकं रोगं हरेति च ।
विपक्षं छेदयेत्युक्त्वा योगं मय्यर्पय द्वयम् ॥ १२॥

स्वाहान्तं मनुमुद्धृत्य जपाद्योगी भवेन्नरः ।
खेचरत्वं समाप्नोति योगाभ्यासेन योगिराट् ॥ १३॥

डाकिनीं ब्रह्मणा युक्तां मूले ध्यात्वा पुनः पुनः ।
जपेन्मन्त्रं सदायोगी ब्रह्ममन्त्रेण योगवित् ॥ १४॥

ब्रह्ममन्त्रं प्रवक्ष्यामि तज्जापेनापि योगिराट् ।
ब्रह्ममन्त्रप्रसादेन जडो योगी न संशयः ॥ १५॥

प्रणवत्रयमुद्धृत्य दीर्घप्रणवयुग्मकम् ।
तदन्ते प्रणवत्रीणि ब्रह्म ब्रह्म त्रयं त्रयम् ॥ १६॥

सर्वसिद्धिपदस्यान्ते पालयेति च मां पदम् ।
सत्त्वं गुणो रक्ष रक्ष मायास्वाहापदं जपेत् ॥ १७॥

डाकिनीमन्त्रराजञ्च शृणुष्व परमेश्वर ।
यज्जप्त्वा डाकिनी वश्या त्रैलोक्यस्थितिपालकाः ॥ १८॥

यो जपेत् डाकिनीमन्त्रं चैतन्या कुण्डली झटित् ।
अनायासेन सिद्धिः स्यात् परमात्मप्रदर्शनम् ॥ १९॥

मायात्रयं समुद्धृत्य प्रणवैकं ततः परम् ।
डाकिन्यन्ते महाशब्दं डाकिन्यम्बपदं ततः ॥ २०॥

पुनः प्रणवमुद्धृत्य मायात्रयं ततः परम् ।
मम योगसिद्धिमन्ते साधयेति द्विधापदम् ॥ २१॥

मनुमुद्धृत्य देवेशि जपाद्योगी भवेज्जडः ।
जप्त्वा सम्पूजयेन्मन्त्री पुरश्चरणसिद्धये ॥ २२॥

सर्वत्र चित्तसाम्येन द्रव्यादिविविधानि च ।
पूजयित्वा मूलपद्मे चित्तोपकरणेन च ॥ २३॥

ततो मानसजापञ्च स्तोत्रञ्च कालिपावनम् ।
पठित्वा योगिराट् भूत्वा वसेत् षट्चक्रवेश्मनि ॥ २४॥

शक्तियुक्तं विधिं यस्तु स्तौति नित्यं महेश्वर ।

तस्यैव पालनार्थाय मम यन्त्रं महीतले ॥ २५॥

तत् स्तोत्रं शृणु योगार्थं सावधानावधारय ।
एतत्स्तोत्रप्रसादेन महालयवशो भवेत् ॥ २६॥

ब्रह्माणं हंससङ्घायुतशरणवदावाहनं देववक्त्र।
विद्यादानैकहेतुं तिमिचरनयनाग्नीन्दुफुल्लारविन्दम्
वागीशं वाग्गतिस्थं मतिमतविमलं बालार्कं चारुवर्णम् ।
डाकिन्यालिङ्गितं तं सुरनरवरदं भावयेन्मूलपद्मे ॥ २७॥

नित्यां ब्रह्मपरायणां सुखमयीं ध्यायेन्मुदा डाकिनी।
रक्तां गच्छविमोहिनीं कुलपथे ज्ञानाकुलज्ञानिनीम् ।
मूलाम्भोरुहमध्यदेशनिकटे भूविम्बमध्ये प्रभा।
हेतुस्थां गतिमोहिनीं श्रुतिभुजां विद्यां भवाह्लादिनीम् ॥ २८॥

विद्यावास्तवमालया गलतलप्रालम्बशोभाकरा।
ध्यात्वा मूलनिकेतने निजकुले यः स्तौति भक्त्या सुधीः ।
नानाकारविकारसारकिरणां कर्त्री विधो योगिना।
मुख्यां मुख्यजनस्थितां स्थितिमतिं सत्त्वाश्रितामाश्रये ॥ २९॥

या देवी नवडाकिनी स्वरमणी विज्ञानिनी मोहिनी ।
मां पातु पिरयकामिनी भवविधेरानन्दसिन्धूद्भवा ।
मे मूलं गुणभासिनी प्रचयतु श्रीः कीतीचक्रं हि मा।
नित्या सिद्धिगुणोदया सुरदया श्रीसंज्ञया मोहिता ॥ ३०॥

तन्मध्ये परमाकला कुलफला बाणप्रकाण्डाकरा
राका राशषसादशा शशिघटा लोलामला कोमला ।
सा माता नवमालिनी मम कुलं मूलाम्बुजं सर्वदा ।
सा देवी लवराकिणी कलिफलोल्लासैकबीजान्तरा ॥ ३१॥

धात्री धैर्यवती सती मधुमती विद्यावती भारती ।
कल्याणी कुलकन्यकाधरनरारूपा हि सूक्ष्मास्पदा ।
मोक्षस्था स्थितिपूजिता स्थितिगता माता शुभा योगिना।
नौमि श्रीभविकाशयां शमनगां गीतोद्गतां गोपनाम् ॥ ३२॥

कल्केशीं कुलपण्डितां कुलपथग्रन्थिक्रियाच्छेदिनी।
नित्यां तां गुणपण्डितां प्रचपलां मालाशतार्कारुणाम् ।
विद्यां चण्डगुणोदयां समुदयां त्रैलोक्यरक्षाक्षरा।

ब्रह्मज्ञाननिवासिनीं सितशुभानन्दैकबीजोद्गताम् ॥ ३३॥

गीतार्थानुभवपिरयां सकलया सिद्धप्रभापाटलाम् ।
कामाख्यां प्रभजामि जन्मनिलयां हेतुपिरयां सत्क्रियाम् ।
सिद्धौ साधनतत्परं परतरं साकाररूपायिताम् ॥ ३४॥

ब्रह्मज्ञानं निदानं गुणनिधिनयनं कारणानन्दयानम् ।
ब्रह्माणं ब्रह्मबीजं रजनिजयजनं यागकार्यानुरागम् ॥ ३५॥

शोकातीतं विनीतं नरजलवचनं सर्वविद्याविधिज्ञम् ।
सारात् सारं तरुं तं सकलतिमिरहं हंसगं पूजयामि ॥ ३६॥

एतत्सम्बन्धमार्गं नवनवदलगं वेदवेदाङ्गविज्ञम् ।
मूलाम्भोजप्रकाशं तरुणरविशशिप्रोन्नताकारसारम् ॥ ३७॥

भावाख्यं भावसिद्धं जयजयदविधिं ध्यानगम्यं पुराणम्
पाराख्यं पारणायं परजनजनितं ब्रह्मरूपं भजामि ॥ ३८॥

डाकिनीसहितं ब्रह्मध्यानं कृत्वा पठेत् स्तवम् ।
पठनाद् धारणान्मन्त्री योगिनां सङ्गतिर्भवेत् ॥ ३९॥

एतत्पठनमात्रेण महापातकनाशनम् ।
एकरूपं जगन्नाथं विशालनयनाम्बुजम् ॥ ४०॥

एवं ध्यात्वा पठेत् स्तोत्रं पठित्वा योगिराड् भवेत् ॥ ४१॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने
सिद्धमन्त्रप्रकरणे षट्चक्रसिद्धिसाधने
भैरवभैरवीसंवादे डाकिनी स्तोत्रं सम्पूर्णम् ॥ पटलः ३०॥